नमः

परदेवतायै ॥

# शतश्लोकीरघुवंशः ।

श्री

दौर्गादत्ति हरिकृष्ण विरचितः

तदनुज श्रीजयकृष्ण कृतया टिप्पण्या समेतः ॥



काश्यां ।

भारतजीवन यन्त्रे मुद्रितः ॥

१८८६

मूल्य डाक व्यय सहित =)॥

श्रीः

## ॥ भूमिका ॥

निश्चय है कि प्रथम तो इस शतश्लोकी काव्य को रीतिपूर्वक पढ़ने से बाल विद्यार्थियों को रघुवंशादि महामहाकाव्य सीखने में अच्छी योग्यता हो जायगी पुनः उक्त विद्यार्थियों को अत्यल्प श्रम से थोड़ेही काल में एक काव्य समाप्तिजन्य सुख का भी लाभ होगा। और उन्नीस सर्गात्मक सारे रघुवंश काव्य का पूरा पूरा सारार्थ तो इस छोटे काव्य के आद्योपान्त सीधा पढ़ने वा श्रवण करनेही से प्राप्त हो सक्ता है, किम्बहुना ॥

इस काव्य में महाकाव्य रघुवंश का पहला सर्ग, दश तीसरा, छ चौथा, चार तेरहवां, तीन पाँचवाँ, आठ सोलहवाँ, चार उन्नीसवाँ, तीन और शेष, पाँच पाँच श्लोकों में समाप्त हुए हैं ॥

( श्रीजयकृष्णशर्म्मा )

ॐ

नमः

परदेवतायै ॥

# ॥ शतश्लोकीरघुवंशः ॥

वंदेश्रीतातपादाब्जं (१) श्रीविद्यामृतसम्भवम् ।
करुणारससम्पूर्णङ्काव्यज्ञानार्थसिद्धये ॥ १ ॥
रघुवंशादिकाव्यानि महान्तिप्रपठिष्यताम् ।
बालानाम्सुखशुद्ध्यर्थं (२) लघुकाव्यम्प्रणीयते ॥२॥

---

(१) अत्र श्रीतातपादाब्जस्य ब्रह्मविद्योपासनया लब्धसाक्षात्कारस्यार्थादात्मज्ञानिनः श्रीविद्यामृतसंभवत्वं तद्रूपत्वमितियावत् सर्वज्ञत्वञ्चसिद्धमत्येव । अत एवंभूतस्य श्रीतातपादाब्जस्य श्रीविद्यामृतसम्भवत्वात्कारुणिकत्वात्तज्जनकत्वाच्चापिचतुर्वर्गसिद्धिदातृत्वंसिद्धमति । किम्पुनः काव्यज्ञानार्थसिद्धिदातृत्वम् । परंत्वत्रकाव्यग्रथनारम्भे काव्यज्ञानार्थसिद्धिरावश्यकत्वात्स्वस्याप्यनन्यशरणत्वात्काव्यज्ञानार्थसिद्धयेचोक्तगुणसम्पन्नं भगवत्तातपादाब्जमेवप्रार्थयति काव्यकर्ता ॥

(२) सुखशुद्ध्यर्थं = महाकाव्याध्ययनयोग्यतार्थमित्यर्थः ॥

वैवस्वतमनोर्वंशे दिलीपइतिविश्रुतः ।
प्रसूतोराजशार्दूलः शार्दूलइवकानने ॥ ३ ॥
सुदक्षिणा (१) च तत्पत्नी बभूवमगधान्वया (२) ।
पत्नीमन्तं यथाऽऽत्मानम्मेने लक्ष्म्याऽवयोऽच्युतः ॥४॥
तस्यामलब्धतनयः सनयः (३) सजरन्नपि ।
अनन्ता (४) ञ्चतुरन्ता (५) न्नपालयन्नपिपिप्रिये॥५॥
सचिवन्यस्तभूभारः सैकदा महिषीसखः (६) ।
सुतकामनयासौम्यो (७) गुरोराश्रममभ्यगात् ॥६॥
विचित्रफलपुष्पाणि वनानि रथमास्थितौ ।
नानामृगाणिपश्यन्तावृषेः प्रापतुराश्रमम् ॥ ७ ॥
स्यन्दनादवरुह्याथ स सायंभार्य्ययासह ।

(१) सुदक्षिणा = तदाख्यातस्य दिलीपस्य भार्य्या ।
(२) मगधान्वया = मगधवंशोत्पन्ना ।
(३) सनयः = नीतिशास्त्रज्ञ इत्यर्थः ।
(४) अनंतां = भूमिं ॥
(५) चतुरंतां = चतुःसमुद्रान्ताम् ।
(६) महिषीसखः = महिषीमात्रसहायः ।
(७) सौम्यः = आश्रमगमनयोग्यतायुक्तः ॥

सपत्नीक(१)मृषिन्नत्वास्वदुःख(२)म्विन्यवेदयत्॥८॥
प्रयुक्तकुशलप्रश्नः (३) श्रुतराजनिवेदनः ।
समाविष्टःकरुणया(४)ऽनुदध्यौभगवानृषिः ॥९॥
अथ ध्यानपरिज्ञातसन्ततिस्तम्भकारणः (५) ।
सुतायाःसुरभेस्तं स सपर्य्यायैतदाऽदिशत् ॥१०॥
अन्येद्युरथभूपालः प्रयतः (६) समुदक्षिणः ।
विपिनाभिमुखन्धेनोः प्रतस्थेचारणाय सः ॥११॥
यत्रयत्रचयातिस्म यथेच्छं (७) नन्दिनीवने ।
धनुर्वाणधरोराजा तत्रतत्रान्वगादिमाम् ॥१२॥

(१) सपत्नीकं = सारुंधतीकम् ।
(२) स्वदुःखं = अनपत्यतारूपम् ॥
(३) प्रयुक्तकुशलप्रश्नः = कुशलमस्तीतिकृतजिज्ञासः ।
(४) करुणया = अनपत्योऽयमितिकारुण्येन ।
(५) ध्यानपरिज्ञातसंततिस्तंभकारणः = ध्यानेनपरिज्ञातंसंततिस्तंभकारणं नंदिनीशापप्रदानरूपं येन स तथोक्तः ।
(६) प्रयतः = कृतशौचाचारः ।
(७) यथेच्छं = यथेष्टं ।

तस्मिन्परिचर(१)त्येवम्मायया(२)सुपरीक्ष्य सा ।
लभस्वात्मनितद्भक्तिमितिपुत्रम्वरं (३) ददौ ॥१३॥
ततः प्रतीत (४) आगत्य गुर्व्वाविदितगोवरः (५) ।
सभार्य्यस्तदनुज्ञातः प्रतस्थेस्वपुरोन्नृपः ॥१४॥
अथगर्भंसमाधत्त राज्ञीभोग (६) मिवास्मिता(७)।
अनुप्रविष्ट(८)मष्टांशैर्दिक्पानां(९)पतिदेवता १५

(१) परि चरति = परिचर्य्यां कुर्व्वति सति ।
(२) मायया = कल्पितमृगेंद्ररूपया = आत्मनि तस्य राज्ञो भक्तिं सुपरीक्ष्य ॥
(३) वरं = पुत्रं लभस्वात्म गुणानुरूपमिति रूपम् ।
(४) प्रतीतः = हृष्टः ख्याते हृष्टेप्रतीतः स्यादित्यमरः ।
(५) गुर्वाविदितगोवरः = गुरवे आवेदितो गोर्नन्दिन्या वरः पुत्रं लभस्वेतिरूपोयेन स तथोक्तः ।
(६) भोगं = सदसत्कर्म्मफलं ।
(७) अस्मिता = अहंकारः ।
(८) अनुप्रविष्टं = अनुगतं ।
(९) दिक्पानां = लोकपालानाम् ।
(१०) पतिदेवता = पतिव्रता इत्यर्थः ।

ततोऽसूतसुतन्देवीज्ञानं(१)भक्ति(२)रिवोत्तमम्।
जातकर्म्मादिकर्म्मास्य राजा हृष्टोप्यकारयत्॥१६॥
प्रत्यहञ्चीयमानेन प्रहर्षश्च महीक्षितः (३)।
ववृधे तेन (४) पूरेण पर्व्वणीवपयोनिधिः॥१७॥
रघुरित्यभिधानोसौ लक्ष्मीवाँ (५) लब्धयौवनः।
सर्वथात्युक्तिमिप्राप्तः पूर्णचन्द्रइवाबभौ॥१८॥
शतक्रतुपदाकांक्षी (६) क्रतैकोनशतक्रतुः।

(१) ज्ञानं = आत्मज्ञानं।

(२) भक्तिः = स्वस्वरूपानुसंधानं॥ स्वस्वरूपानुसंधानं भक्तिरित्यभिधीयत इत्यात्मबोधः। भक्त्यामामभिजानातियावान् यश्चास्मि तत्वत इति भगवद्वचनात्॥

(३) महीक्षितः = महीं क्षीयत ईशत इति महीक्षित् तस्यमहीक्षितः महीपतेः।

(४) तेन = सहेतिशेषः।

(५) लक्ष्मीवान् = यौवराज्यश्रियायुक्त इत्यर्थः।

(६) शतक्रतुपदाकांक्षी = शतक्रतोरिंद्रस्य पदमाकांक्षत इति शतक्रतु० वा शतं क्रतून् कृतवान्यः सशतक्रतुस्तत्पदं प्रतिष्ठां शतक्रतुख्यातिमात्रमित्यर्थः तदाकांक्षत इतिशत क्रतुपदाकांक्षी॥

अथयज्ञाङ्ग(१)रक्षायां स सैन्यन्तमयोजयत् ॥१९॥
ततोव्रणपरीताङ्गो युद्धतोषितवासवः ।
वृत्तान्त(२)न्तमशेषेणाऽऽचचक्षे जनकाय सः ॥२०॥
कृतकृत्य(३)स्तदाभूपः सुतंयोग्यतया(४) युतम् ।
स्वश्रिया(५)समलङ्कृत्य सभार्य्यः प्रस्थितो वनम् ।२१
शास्तीतिपृथिवींश्रुत्वा दिलीपानन्तरंरघुः ।
पूर्वंम्प्रज्वलितेराज्ञां हृदिशर्पैरिवापतत् ॥ २२ ॥
नवेरघौमहीपाले अद्वयाशासतिक्षितिम् ।
सर्वस्मिन्भुवनेसर्वंमिवैवासीन्नवन्नवम् ॥ २३ ॥
अथप्रजाप्रजः (६) शूरोनन्दिनीवरपुत्रकः (७) ।

(१) यज्ञांगः = घोटकः ।

(२) वृत्तान्तं = क्रतोरशेषफलप्राप्तिरूपं ।

(३) कृतकृत्यः = कृताखिलकर्तव्यः ।

(४) योग्यतया = अखिलभूभारधारणशक्त्या ।

(५) स्वश्रिया = निजराज्यलक्ष्म्या ।

(६) प्रजाप्रजः = प्रजैव प्रजा सन्ततिर्यस्य स तथोक्तः पुत्रवत्प्रजापालकः ।

(७) वरपुत्रकः = नंदिन्यावरेण लब्धो यः पुत्रकः नंदिनीवरपुत्रकः ।

बली(१)चतुःसमुद्रान्ताः स चतस्रोदिशोऽजयत्२४
सुसम्बृद्धोदिशांद्रव्यैः सत्रं (२) सर्वस्वदक्षिणम् ।
चकारात्महितार्थाय नसम्बृद्धिः सताङ्किल ॥२५॥
कौत्स(३)श्चासीन्नृपम्प्राप्तोगुर्वर्थार्थ्य(४)थपार्थिवम्(५)
हताशःपात्र(६)मालोक्यनिरभ्र(७)मिवचातकः२६
तत्तदायातुकामं स प्रतिषिध्य यशोधनः (८) ।
धनंधनाधिपप्राप्त(९)न्निवेद्याऽतोषयद्विजम् ॥२७॥

(१) बली = ससैन्यः ।

(२) सत्रं = यज्ञं ।

(३) कौत्सः = वरतन्तुनाम्नः कस्यचिदृषेः शिष्यः ।

(४) गुऽर्वर्थार्थी = गुरुदक्षिणार्थी ।

(५) पार्थिवं = मृण्मयं । पात्रविशेषणमिदम् ।

(६) पात्रं = अर्घ्यपात्रं ।

(७) निरभ्रं = निरम्बुदं । आकाशमिति शेषः ।

(८) यशोधनः = यशः आगतार्थिजनानिवृत्तिजनितगौ-
रवमेवधनंयस्य स तथोक्तः ।

(९) धनाधिपप्राप्तं = अभियास्यमानात्कुवेराल्लब्धं ॥

प्रतीते(१)थगतेकौत्से वरन्दत्वा(२)तपस्विनि(३) ।
सम्राट्स्वसदृशंकाले देव्यां पुत्रमजीजनत् ॥२८॥
ततोदारक्रियार्हन्तमजं (४) शास्त्रविशारदम् ।
स्वसुःस्वयम्वरे भोजो दूतेनाहूतवान्नृपः ॥ २९ ॥
अजः प्रस्थापितो राज्ञा मार्गेसवलवाहनः ।
गान्धर्व्व(५)मस्त्रंसम्प्राप्य कुंडिन(६)म्प्रापदश्रमात्॥
ततः स्वयम्बरास्थानसंस्थितेषु (७) हिराजसु ।
रराजैकोरघोः सूनुर्धाम्नो (८) डुष्विवचन्द्रमा३१॥

(१) प्रतीते = हृष्टे ।

(२) वरंदत्वा = आत्मसदृशपुत्रवान्भवेत्युक्ता ।

(३) तपस्विनि = वरंदातुं समर्थे इत्यर्थः ।

(४) अजं = तदाख्यंरघुसुतं ।

(५) गान्धर्व्वं = मार्गे प्रियम्वदाख्येन गन्धर्व्वेणदत्तं मोहनास्त्रं ।

(६) कुण्डिनं = भोजनगरम् ।

(७) स्वयम्बरास्थान संस्थितेषु = स्वयंवरणसदसिस्थितेषु । आस्थानी क्लीवमास्थानं स्त्रीनपुंसकयोः सदः इत्यमरः ।

(८) धाम्ना = तेजसा ।

सुनन्दाऽऽ(१) ख्यातभूपालवृत्तवंशाऽहरन्मनः।
राज्ञामिन्दुमतीतत्र कवितेवमनीषिणाम्(२)।३२।
यंयंतत्रव्यतीयाय(३)सम्पत्ति(४)रिवसाचला(५)।
वैवर्ण्यंसमभूपालो लोकेलोकइवा(६)ऽगमत्॥३३॥
साऽवृणोदथकाकुत्स्थं सत्सु(७)सत्स्वपिराजसु।
लोकेसत्स्वप्यनेकेषु(८)कर्तारमिवहिक्रिया(९)३४
सा पतिन्तमनुप्राप्य भार्य्यास्वसुशुभेसताम्।
शोभतेहिविभावर्य्या चन्द्रश्चन्द्रेणशर्व्वरी॥ ३५॥

(१) सुनन्दयामातृसख्या ऽऽख्याताभूपालानांस्वयम्बरसदस्युपविष्टानां भूपतीनांवृत्तानिचवंशाश्चयस्यै सा तथोक्ता इंदुमती।

(२) मनीषिणां = कवितामर्म्मज्ञानामितिभावः।

(३) व्यतीयाय = तत्याज।

(४) सम्पत्तिः = लक्ष्मीः।

(५) चला = गच्छंती। सम्पत्तिपक्षेचलाऽस्थिराचञ्चलेत्यर्थः

(६) लोकइव = जनइव।

(७) सत्सु = सौंदर्य्यसुशीलतादि सद्गुणसम्पन्नेषु।

(८) अनेकेषु = जनेष्वितिशेषः।

(९) क्रिया = सदसत्कर्म्मेतियावत्।

ततः स्वसारमादाय वैदर्भःसोपयन्तृकाम् (१) ।
पुरप्रवेशाभिमुखः प्रतस्थेसबलानुगः ॥ ३६ ॥
तौतदाऽलौकिकं(२)राजमार्गे नाव्यप्रतारकम्(३)।
दिदृक्षूणामथेवासीज्जनानांहिमहोत्सवः ॥ ३७ ॥
विवाहितानुजोभोजस्ततस्तौसवधूवरौ ।
प्रतिप्रस्थापयामाससाकेत(४)ञ्चान्वगात्स्वयम् ३८
निवृत्ते मार्गमावृत्यतस्मि (५) न्राजन्यकंरणे ।
युद्धान्तंस्वापयामासगान्धर्वास्त्रेण(६)राघवः ॥३९॥
सबलस्तान्विनिर्द्धूयभार्य्यया (७) स्वपुरंययौ ।

(१) सोपयंतृकां = उपयंत्रावरेणसहितां ।

(२) अलौकिकं = लोकेष्वप्रचलितंलोकानामविदितमित्यर्थः ।

(३) नाव्यप्रतारकं = नाव्ये वा नाव्येन प्रतारकं छलनापरंपुरुषंदिदृक्षूणां इवतौदिदृक्षूणां जनानां ।

(४) साकेतं = अयोध्यांप्रति ।

(५) तस्मिन् = भोजराजे निवृत्तेसति ।

(६) कुण्डिनम्प्रत्यागच्छताऽजेन पथिगन्धर्वात्प्राप्तेन पूर्वोक्ते नास्त्रेण ।

(७) भार्य्यया = सहेतिशेषः ।

भानुमानभ्रसन्दोहान्भये(१)ववरुणालयम्(२)४०
प्रवयाः(३) लब्धवृत्तान्तः प्रीतोराजारघुस्ततः।
युयोजराजलक्ष्म्यातमिन्दुमत्यं वभोजराट् ॥४१॥
विनाशधर्म्मिंषुप्राज्ञो विषयेषुपराङ्मुखः।
दिलीपनन्दनः(४)क्षोणीं शशासरघुनन्दनः॥४२॥
अथयोगिनि(५)राजर्षौ संयुक्ते(६)परमात्मनि।
सुतंदशरथंभूप इन्दुमत्यामवापसः॥ ४३ ॥
अजेसभार्य्येंविहरत्युद्यानेचैकदाऽवला (७)।
निमिमील(८)स्रजः९स्पर्शात्करस्पर्शादिवौषधी१०

(१) भया = दीप्त्या। (२) वरुणालयं = चरमाचलम्।
(३) प्रवयाः = वृद्धः।
(४) दिलीपनंदनः। आसीदितिशेषः।
(५) योगिनि = अष्टाङ्गयोगज्ञे।
(६) परमात्मनिसंयुक्ते। सायुज्यं प्राप्ते सति। मृतेसतीत्यर्थः। (७) अवला = इन्दुमती।
(८) निमिमील = विपन्नेत्यर्थः।
(९) स्रजः = आकाशमार्गेण गोकर्णक्षेत्रं प्रतिगच्छतोनारदर्षेर्वीणायाविभ्रष्टायामालतीमालायाः।
(१०) औषधी = बनस्पतिविशेषः लज्जावतीतिदेशभाषायांप्रसिद्धा।

विलपन्नष्टभार्य्योऽसावुपदेशै (१) ऋषे(२) रपि
बोधितोप्यप्रबुद्धोहि लेभेशान्ति(३)म्विपद्यसः॥४५
महारथोदशरथोप्यधिगम्यपितुःपरम् ।
सुपुत्रोवा(४)कुलाचारान्पातिस्मोत्तरकोशलान्(५)
कृतदारोदिशोजित्वासोऽनुष्टितमहाक्रतुः (६) ।
मेनेकृतार्थमात्मानंकृतान्हिक(७)इवद्विजः॥४७॥
तिस्रः (८) पत्नोमिलित्वा तम्प्रणयेन सिषेविरे ।
सिताऽसितासरस्वत्यः(९) समेताइववारिधिम्४८

(१) उपदेशैः = मरणंप्रकृतिः शरीरिणामित्यादिभिः ।
(२) ऋषेः = वशिष्ठस्य ।
(३) शान्तिं = प्रयागराजेप्रायोपवेशेन विपद्यस्वर्गमासाद्याप्सरोरूपांतामेवस्वप्रियामिन्दुमतीं लब्ध्वेत्यर्थः ।
(४) वा = इव० इववद्वायथाशब्दाविविशदार्णवः ।
(५) उत्तरकोशलान् = तदाख्यान्जनपदान् ।
(६) अनुष्ठितमहाक्रतुः = कृताश्वमेधादियज्ञः ।
(७) कृताह्निकः = कृतसंध्योपासनादिदिवसकृत्यः ।
(८) तिस्रः = कौशल्या कैकयी सुमित्राः ।
(९) सिताऽसितासरस्वत्यः = गंगायमुनासरस्वत्यः ।

अथानुभूय भूपालो वसन्तोत्सवमागतम् ।
मृगयायै महारण्यं ययौ भाविप्रणोदितः ॥ ४९ ॥
हत्वा तत्र मुनेः पुत्रङ्कुम्भपूरणवञ्चितः (१) ।
लब्धशापवरो(२)नातिप्रमनाः(३)पुरमाययौ॥५०॥
हायनेष्वथ गच्छत्सु स्थविरः कश्यपोपमः ।
अनवाप्यात्मजं राजा पुत्रीया(४)मिष्टिमारभत्।५१।
ततो नारायणः शक्रप्रमुखैस्तैरभिष्टुतः ।
रावणोपप्लुते(५)र्राज्ञः कुक्षिषू वासयोषिताम्॥५२॥
अथ प्रसूतिसमये तिस्रस्ता राजयोषितः ।
लेभिरेचतुरःपुत्रान्पुरुषार्थानिवाङ्गिनः(६)॥५३॥

(१) कुम्भपूरणवंचितः = कुम्भपूरण सम्भवे शब्दे बृंहितमाशङ्कमानः ।

(२) लब्धशापवरः = लब्धः शापएव वरो (अपुत्रस्य पुत्रशोकान्मरण रूपो) येन स तथोक्तोऽतएव नातिप्रमनाः ।

(३) नातिप्रमनाः = नातिप्रहृष्टहृदयः ।

(४) पुत्रीयां = पुत्रदायिनीमित्यर्थः ।

(५) रावणोपप्लुतेः = रावणेन विप्रकृतेरित्यर्थः ।

(६) अंगिनः = शरीरिणः ।

रामलक्ष्मणशत्रुघ्नाः समं सभरतास्त्रयः ।
मुनिभिःकृतसंस्कारा: प्रीत्यावबधिरे पितुः॥५४॥
चतुर्णामुदये तेषां कृतार्थास्त्रिदिवौकसः ।
धर्मार्थकाममोक्षाणा(१)मभवन्साधका(२)इव५५
काकपक्षधरं (३) रामं यज्ञविघ्नोपशान्तये ।
ययाचे राजशार्दूलमृषि(४)रेत्य तपोवनात्॥५६॥
सह प्रस्थापितस्तेन (५) राज्ञा रामः सलक्ष्मणः ।
तपोवनमुपेत्याशु प्रजघान क्रतुद्विषः (६) ॥ ५७॥
ससौमित्रिस्ततोरामोऽप्याहूतेन(७)र्षिणा(८)सह।
मिथिलायामथो गत्वा प्रबभञ्जैश्वरंधनुः ॥ ५८ ॥

(१) धर्मार्थकाममोक्षाणामुदयेप्रादुर्भावे ।
(२) साधकाः = देवतोपासकाः ।
(३) काकपक्षधरं = शिखंडधारिणं—बालानां तु शिखा प्रोक्ता काकपक्षशिखंडकावित्यमरः ।
(४) ऋषिः = विश्वामित्रः ।
(५) तेन = ऋषिणा सह ।
(६) क्रतुद्विषः = राक्षसान् ।
(७) आहूतेन = निमंत्रितेन—जनकेनेतिशेषः ।
(८) ऋषिणा = विश्वामित्रेण ।

ततःपङ्क्तिरथ (१) स्तत्र समुपेत्य सपुत्रकः (२) ।
विवाह्य चतुरःपुत्रान्प्रार्थयामास(३)पार्थिवम्(४)
स विसृष्टो विदेहेनभार्गवक्षणविघ्नितः (५) ।
कन्यारत्ना(६)न्युपादायाऽऽससाद ससुतःपुरीम् ६०
कैकेयीप्रीतये पित्राऽनुज्ञातः(७)श्रीवियोजितः ।
ससीतालक्ष्मणोरामः प्रविवेशाथदण्डकान्(८)६१॥
जटाचीरधरस्तत्राऽनुयास्यन्तं हठाद्वने ।
उक्ततातविनिर्वाण(९)म्भरतंविससर्ज्ज सः॥६२॥

(१) पंक्तिरथः = दशरथः ।

(२) सपुत्रकः = सभरतशत्रुघ्नः ।

(३) प्रार्थयामास = गृहं प्रति गमनायादिशेति कथया मासेत्यर्थः ।

(४) पार्थिवं = जनकं

(५) भार्गवक्षणविघ्नितः = भार्गवेण परशुरामेणागत्य मार्गे मुहूर्त्तमात्रं विघ्नित उद्वेजितः ।

(६) कन्यारत्नानि = सीताद्यास्वतस्रो वधूः ।

(७) अनुज्ञातः = चतुर्द्दशः समाव्याप्य वने निवसेत्याज्ञप्तः ।

(८) दण्डकान् = तदाख्यानि वनानि ।

(९) उक्ततातविनिर्वाणं = कथित पितृमरणम् ।

तत्रतत्र भ्रमत्यस्मिन्रामेस्वसृप्रचोदितः (१) ।
जहारसीताम्पौलस्त्यः (२) कृत्वा मायामृगंवने ।६३।
इतस्ततो विचिन्वँस्तां क्रियाः (३) कृत्वा जटायुषः ।
जघान वालिनं रामः सख्युः (४) प्रियचिकीर्षया ॥६४॥
दग्धलङ्का (५)त्ततः श्रुत्वाप्रियोदन्त (६)हनूमतः ।
हरिसैन्यैरगाल्लङ्कां बद्धवारिधिसेतुभिः ॥ ६५ ॥
विभीषणयुत (७)स्तत्रचक्षणसोढाऽनुजव्यथः (८) ।

(१) स्वसृप्रचोदितः = स्वस्रा भगिन्या सूर्पणखया प्रचोदितः प्रेषितः ।

(२) पौलस्त्यः = रावणः ।

(३) क्रियाः = (परार्थं प्राणानुत्सृष्टवतो जटायुषः) और्द्धदैहिकीः क्रियाः ।

(४) सख्युः = सुग्रीवस्य ।

(५) दग्धलङ्कात् = दग्धा लङ्का येन स ।

(६) प्रियोदंतं = प्रियायाः सीताया वृत्तांतं ।

(७) विभीषणयुतः = रावणाद्भीतेन शरणागतेन विभीषणेन युक्तः ।

(८) क्षणसोढानुजव्यथः = क्षणं सोढाऽनुजस्य लक्ष्मणस्य व्यथाशक्ति जनित मूर्च्छा येन स तथोक्तः ।

जघान समरे रामो रावणं ससुतानुजम् (१)॥६६॥
विभीषणायदत्वाथ रामोवैश्रवणश्रियम् (२)।
सभार्य्योयान(३)मारुह्यप्रतस्थेहरिभिः(४)पुरीम्६७
अथ दाशरथिर्गच्छन् पथिपत्न्यै पयोनिधिम्।
पुण्याश्रमान् प्रयागञ्च खोदन्त (५) ञ्चाप्यवर्णयत्६८
ततद्रामः पुरं तस्यै दर्शयन् प्रापदश्रमात्।
दृष्ट्वाश्रमंगुरोः(६)त्न्यै(७)तद्वृद्धप्रपितामहः(८) ६९
अथैत्योपवनन्तत्र (९) पौरैश्च भरतादिभिः।
सानुगः (१०) सत्कृतोरामःसीतयाऽ (११) विश-

(१) ससुतानुजं = सेंद्रजित्कुम्भकर्णादिम्।
(२) वैश्रवणश्रियं = रावणश्रियं।
(३) यानं = पुष्पकम्।
(४) हरिभिः = सहेति शेषः।
(५) खोदंतं = वियोगकालीनं वृत्तान्तम्।
(६) गुरोः = वशिष्टस्य।
(७) पत्न्यै = सुदक्षिणाये।
(८) तद्वृद्ध० = दिलीपः।
(९) तत्र = अयोध्यायाम्।
(१०) सानुगः = (अनुगैः) सुग्रीवविभीषणादिभिः सहितः
(११) सीतया = सहेति शेषः।

दा (१) लयम् ॥ ७० ॥
ततस्तु लब्धराज्योऽसौ भार्य्ययाऽनघया (२) सह ।
विहरन् पालयामास महीं दायादनन्दनः (३) ॥ ७१
लोकापवादभीतोथ सतीं गर्भवतीमपि ।
तत्याज राघवः पत्नीं प्रतिषिद्धाऽनुजेप्सितम् (४) ७२
तान्तु भागीरथीतीरे विलपन्तीम्पुनः पुनः ।
लक्ष्मणेन विसृष्टां हि स्वं निनायाश्रमम्मुनिः (५) । ७३ ।
प्रजावतीनिदेशेन (६) सौमित्रिस्तमुपेयिवान् ।
समं निवेदयामास खिन्नः (७) कार्य्यं (८) मनुष्ठितम् ७४
सीतापतिगतप्राणा ( ९ ) पत्युः सन्तान सिद्धये ।

(१) अविशत् = प्रविवेश ।
(२) अनघया = वह्नौ विशुद्धया ।
(३) दायादनंदनः = बांधवप्रियः ।
(४) अनुजेप्सितं = अनुजानां भरतादीनां ईप्सितं सीताऽपरित्याग रूपं ।
(५) मुनिः = बाल्मीकिः ।
(६) प्रजावती निदेशेन समं = सीता संदेसेन सह अनुष्ठितं कार्य्यं निवेदयामासेत्यन्वयः ।
(७) खिन्नः = भ्रातृजाया त्यागदुःखितः ।
(८) कार्य्यं = सीताविसर्ज्जनं ।
(९) पतिगतप्राणा = अनन्यचित्तेत्यर्थः ।

वन्यै(१)र्वल्कलिनी(२)देहम्बभार(३)र्षैस्तदाऽऽश्रमे
रामाविरहितो रामोलवणोपप्लुतै (४) स्ततः ।
आदिदेशाऽनुज(५)न्तस्य वधायमुनिभिस्तुतः(६)॥
स तं निहत्य लवणं शत्रुघ्नो मुनिनन्दितः ।
निर्म्माय मथुरान्तत्र पुरीमग्रजमभ्यगात् ॥७७॥
महर्षिःस्वकृति(७)ङ्काले जानक्याजनितौ सुतौ ।
कृतौकुशलवौ नाम्नाऽध्याप्यवेदमगापयत्(८)।७८।
द्विसूनव(९)स्त्रय(१०)स्तेपिमुक्तपुत्रर्णबन्धनाः(११)

(१) वन्यैः = वनेभवैः कंदमूलादिभिः ।
(२) वल्कलिनी = वल्कलाम्बरधारिणी ।
(३) बभार = पुपोषेत्यर्थः ।
(४) लवणोपप्लुतैः = लवणासुरेण पीड़ितैः ।
(५) अनुजं = शत्रुघ्नम् ।
(६) मुनिभिःस्तुतः = मुनिभिर्गत्वा स्तुतिपूर्वकं लवणासुरवधं याचित इत्यर्थः ।
(७) स्वकृतिं = रामायणम् ।
(८) अगापयत् = वेदमध्याप्यस्वकृतिमगापयद्गापयामास।
(९) द्विसूनवः = द्वौ द्वौ सूनू पुत्रौ येषां ते ।
(१०) त्रयः = भरतलक्ष्मणशत्रुघ्नाः ।
(११) मुक्तपुत्रर्णबंधनाः = मुक्तं पुत्रर्णमेव बंधनं येषां ते ।

निवेश्य तनयाँस्तत्रतत्र(१)राममथाऽऽययुः॥७९॥
विपन्नञ्जीवयामासाऽकालेविप्रात्मजन्ततः ।
शम्बुकम्पादजं(२)हत्वारामस्ताःपालयन्प्रजाः।८०।
अथ यज्ञे समारब्धेगान(३)मात्मजयोः(४)प्रभुः ।
श्रुत्वाऽऽज्ञयामुनेः(५)पत्न्याः(६)स्वीचक्रेसम्परिग्रहम्
सीताङ्का(७)वङ्कमारोप्य गतवत्यां रसातलम् ।

(१) तत्रतत्र = भरतः तक्षशिलायां पुरि तक्षं,—पुष्कलावत्यां पुष्कलं—लक्ष्मणः अंगदचंद्रकेतूद्वाविव-कारापथे—शत्रुघ्नः—मथुरायां शत्रुघातिनं, विदिशायां सुबाहुं, निवेश्येत्यर्थः ।

(२) पादजं = शूद्रं ।

(३) गानं = रामायणगायनं ।

(४) आत्मजयोः = वाल्मीकिना सहाऽऽगतयोः कुशलवयोः ।

(५) मुनेः वाल्मीकेरनुज्ञया = सीता पुनः पत्नीत्वेन स्वीक्रियतामित्यर्थवत्याऽऽज्ञया ।

(६) पत्न्याः = सीतायाः ।

(७) कौ = धरण्यां सीतामङ्कमारोप्य रसातलं गतवत्यां सत्यां ।

स यज्वान्तिकुशलवौराजधान्यो(१)र्न्यवेशयत्॥८२॥

ततः सानुजोरामः त्यक्तः सौमित्रिणाभयात् (२)।
कृतकृत्यः(३)समम्पौरै(४)रारुरोहत्रिविष्टपम्॥८३॥

कुशे कुशावतीं सप्तभ्रातरः शाशतीतरे ।
तत्रैव (५) मनसा तस्थुर्देहैः पृथगपिस्थिताः॥८४॥

अथाधिदेवताया (६) स्तदयोध्याया वचः कुशः ।
प्रतिश्रुत्यार्द्धरात्रे स्म प्रातस्ताम्प्रतिगच्छति ॥८५॥

स्वपुरीम्विप्रसात्कृत्वा (७) सभृत्यबलवाहनः ।
सपौर सचिवस्तत्रो(८)वासवासव सन्निभः॥ ८६॥

(१) राजधान्योः = कुशावतीशरावत्योः पुर्य्योः ।

(२) भयात् = दुर्वासस आगमनाद्धेतोः, मुनिवेशवर्तो-तकस्य सहसंवादिनः प्रतिश्रुतान्यागमननिषेधस्य रामस्य, आज्ञां बिलंघ्य शापभयात्प्रत्यागतं दुर्वाससं विनिवेदयता लक्ष्मणेन रामो मांत्यक्ष्यतीति भीत्या ।

(३) कृतकृत्यः = कृतदेवकार्य्यः ।

(४) पौरैः = गृहवर्ज्जमयोध्यया सहेत्यर्थः ।

(५) तत्रैव = कुशावत्यां एव ।

(६) अधिदेवतायाः = अयोध्याधिदेवतायाः ।

(७) विप्रसात्कृत्वा = ब्राह्मणेभ्यो दत्वेत्यर्थः ।

(८) तत्र = अयोध्यायाम् उवास ।

जातुग्रीष्मोत्सवी (१) राजा विहरन् सरयूजले ।
पत्नीत्वेनाददेदत्ताङ्कुमुदेन(२)कुमुद्वतीम्(३)८७॥
पुत्रमाप कुमुद्वत्यामतिथिंनाम (४) राघवः ।
श्रद्धावत्यां(५)यथामत्यामात्मज्ञानञ्जितेन्द्रियः ।८८।
कुशन्तन्निहतेना (६)थदुर्ज्जयेन (७) निपातितम् ।
सती कुमुद्वती भक्त्या विभेव रविमन्वगात् ॥८९॥
ततस्तदात्मजं राज्ये मन्त्रिमुख्याः समादधुः ।
संग्रामं यास्यतोभर्तुराज्ञां (८)स्मृत्वायशस्विनः(९) ।

(१) ग्रीष्मोत्सवी = ग्रीष्म काले जलक्रीड़ाप्रिय इतिभावः ।
(२) कुमुदेन = नागराजेन ।
(३) कुमुद्वतीं = निजस्वसां ।
(४) नाम = इत्यव्ययम् ख्यात्यर्थं ।
(५) श्रद्धावत्यां = श्रद्धावांल्लभते ज्ञानं तत्परः संयतेंद्रियः इति भगवद्वचनात् ।
(६) तन्निहतेन = तेन कुशेन निहतो निपातितस्तेन । कुशः दुर्ज्जयेन निपातित दुर्ज्जयः कुशेनेति कथा ।
(७) दुर्ज्जयेन = तदाख्येन दानवेन ।
(८) आज्ञां = दुर्जयश्चेन्मां व्यापादयेत्तदा भवद्भिर्ममात्मजोराज्येऽभिषेच्यः इत्यादि रूपां ।
(९) यशस्विनः = यशोधनस्य शरीरानपेक्षकस्येत्यर्थः ।

कौमुद्वतेयः (१) सुतरान्नीतिविद्याविशारदः ।
प्रशशास पुरीम्प्राज्ञ इवशक्रोऽमरावतीम् ॥ ९१॥
शत्रूणांदुर्ज्जयःशङ्ख्ये (२)वदान्य(३)स्तीर्थकर्म्मसु(४)
प्रजानां रञ्जकश्चासीत्सतस्येव पितामहः (५)॥९२॥
स नैषधस्यार्थपतेः सुतायां निषधाभिधम् ।
सुतमुत्पाद्य धर्म्मात्मानिर्वृत(६)स्त्रिदिवं ययौ॥९३॥
निषधस्यात्मजश्चासीन्नलस्तस्यात्मजोनभः (७) ।

(१) कुमुद्वत्या अपत्यं पुमान् कौमुद्वतेयः ।

(२) शङ्ख्ये = संग्रामे ।

(३) वदान्यः = बहुप्रदः (४)तीर्थकर्म्मसु = यज्ञादिषु सत्कर्म्मसु

(५) पितामहः = रामः ।

(६) निर्वृत्तः = कृतकृत्यः ।

(७) नभस्सुदर्शनयोरंतरे क्रमेण सप्तदश राजानो यथा ।
पुण्डरीकः १ क्षेमधन्वा २ देवानीकः ३ अहीनगुः ४
पारियात्रः ५ शिलः ६ उन्नाभः ७ बज्रनाभः ८
शंखणः ९ व्युषिताश्वः १० विश्वसहः ११ हिरण्य-
नाभः १२ कौशल्यः १३ ब्रह्मिष्टः १४ पुष्कराक्षः १५
पुष्यः १६ ध्रुवसंधिः १७ इति । काव्यस्य शतश्लो-
कित्वादिमे सप्तदश राजानो न वर्णिताः रघुवंशे
श्रीमता महाकविनापि एतेषां गणनैव कृता ।

एकोनविंशतितमो यस्मादासीत्सुदर्शनः (१)॥९४॥
यस्तु षट्वर्षदेशीयः (२) पित्रालब्धवताऽऽपदम् ।
वनेकेशरिणा(३) स्त्यक्तः कुशेनेव निजात्मजः ॥९५॥
मन्त्रिभिः स्थापितो राज्ये बालएव सुदर्शनः ।
व्यरोचत रघोर्वंशे बालचन्द्र इवाम्बरे ॥ ९६ ॥
स प्रत्यहम्बर्द्धमानः शशीव शशभृद्द्युतिः ।
कृतदारोऽग्निवर्णेनकृतास्त्रः (४) पुत्रवानभूत् ॥९७॥
अग्निवर्णस्ततो राजा गुरौ याते तपोवनम् ।
क्षिप्त्वाऽमात्येष्वाधिपत्यम्बभूवस्त्रीपरायणः (५)।९८।
निर्विशन्विषयानेवंपीत्वाऽन्यासां(६)मुखासवम्७।

(१) सुदर्शनः = अग्निवर्णस्य जनकः ।

(२) षट्वर्षदेशीयः = ईषदसमाप्त षट्वर्षः ।

(३) केशरिणः = सिंहाद्वने आपदं मृत्युंलब्धवता पित्रात्यक्त इतिपूर्वेणान्वयः ।

(४) कृतास्त्रः = गुरुभ्योऽधिगतास्त्ररहस्य इत्यर्थः ।

(५) स्त्रीपरायणः = स्त्रीषु निवेशितांतःकरण इत्यर्थः ।

(६) अन्यासां = अपर स्त्रीणां ।

(७) मुखासवं = मुखमद्यगंडूषान्पीत्वा ताः संभोग्येत्यर्थः।

सेहे काञ्चीगुणैर्बन्धमन्यासां(१)स्तनताड़नम् ९९॥
अथ (२) गदपरिभूते (३) वन्हिवर्णे(४)विपन्ने (५)
सुतवति (६) वरराज्ञी(७)कृत्रिम भूणचिन्हा (८)
अशिषद(९)रिभयेन क्ष्मापतेः(१०) शोकदीनावत
(११) सहरघुराज्यम्मन्त्रिभिः साजरद्भिः ॥१००॥

(१) अन्यासां = अपरस्त्रीणां, अपरस्त्रीमुखमद्यपानाद्धेतोः क्रुद्धानां काञ्चीगुणैर्बंधनं स्तनैस्ताड़नं च सेहे स्वकीयाभिर्विहृत्य परकीयाभिरताड्यतेतिभावः ।

(२) अथ = अनंतरं एवंविधाया विषयाशक्तेः = फलोदये इतियावत् ।

(३) गदपरिभूते = धातुबिकारादिभिरसाध्यैर्महारोगैः परिभूते॰ आक्रान्ते व्याप्ते॰ इत्यर्थः ।

(४) बन्हिवर्णे = अग्निवर्णेराज्ञि (५)बिपन्ने पञ्चत्वंगते सति

(६) असुतवति = अनपत्ये ।

(७) बरराज्ञी = अग्निवर्णस्य महिषी ।

(८) कृत्रिमभ्रूणचिन्हा = पटुभिर्विरचित दोहदलक्षणेत्यर्थः ।

( ९) अशिषत् = सशास पालयामासेत्यर्थः ।

( १० ) क्ष्मापतेः = अग्निवर्णस्य ।

( ११ ) वत = खेदेऽव्ययं ।

इति श्रीमच्छीनाथमहादेव पूज्यपादशिष्येण रुड़ोलवंशोद्भव दौर्गादत्ति हरिकृष्णशर्म्मणा विरचितः

॥ शतश्लोकी रघुवंशः सम्पूर्णः ॥

हरिकृष्णेनरचितः श्रीदुर्गादत्तसूनुना ।
भूयुगाङ्कात्मकमिते वर्षेऽयं श्रीपुरौकसा ॥

प्रमादतोवाभ्रमतोऽथवाचेद्यदत्र किञ्चित्स्खलितं-भवेन्मे। क्षंतव्यमे तत्कृपया सुधीभिर्विभूषणायत्सु धियां क्षमैव ॥

जयकृष्णेन कृतया सुधीभिरनयाऽल्पया ।
टिप्पण्या तुष्यतांयस्मात्संतोषस्तृप्तिकारणम् ॥

श्रीजयकृष्णशर्म्मा ॥

—***—